साळकान्तं मुखाभोगं दधत्यास्तत्सभाश्रियः ।
लीलादर्पणतां प्रापुः सरस्यो यत्र निर्मलाः ॥ ४२ ॥

यत्र च विकचपुण्डरीकषण्डमण्डिता स्फटिकस्वच्छसलिला सतारकेव व्योमलक्ष्मीः,महामहिमविराजितं विभुं विलोकितुमागतेव स्वर्लोककल्लोलिनी सुराङ्गनानेत्रविजिताभिरिव ह्रियान्तर्हिताभिः शफरीभिर्विराजिता खातिका विभाति स्म ।

प्रसूनानां वाटी सुरभिलतमा यत्र वितता
ततः सालो लोलन्मणिगणपरीतः समलसत् ।
चतुर्द्वारप्रान्तान्तरविलसिते नाट्यसदने
ततो मार्गे धूपाश्रितकनककुम्भौ व्यलसताम् ॥ ४३ ॥

या खलु तत्र संमिलितभव्यसंदोहतो भगवद्दर्शनेन निर्गच्छत्पापपरम्पराभिरिव धूपघटनिर्यद्धूमरेखाभिः परीताभ्रभागा, ककुप्कामिनीजनकर्णपूरायमाणपल्लवतल्लजविराजितानामिन्द्रोद्यानजयार्थमुदस्तहस्तानामिवाभ्रङ्कषशाखानां चैत्यवृक्षाणां चतुष्टयेन विभ्राजितैर्विविधविचित्रधारायन्त्रलतामण्डपकाञ्चनक्रीडाशैलपेशलैश्चतुर्भिरुपवनैरुपेता, नानाविधमणिगणखचिततोरणया सुवर्णवेदिकयालङ्कृता, शिखावलदन्तावलदन्तिवैरिप्रमुखलाञ्छनलाञ्छिताभिर्गगनतलोद्वेल्लनसमाकृष्टसुरतरङ्गिणीतरङ्गसम्भावनासंपादकव्याप्तमुक्ताफलरुचिनिचयरुचिराभिर्वैजयन्तीभिर्विलसिता, भगवन्मुख-

---

साळकान्तमिति—यत्र विमला निर्मलाः, सरस्यः कासाराः, अलकान्तैश्चूर्णकुन्तलान्तैः सहित इति सालकान्तस्तम्, पक्षे सालेन प्राकारेण कान्तो मनोहरस्तम्, मुखाभोगमग्रप्रदेशं वक्त्रप्रान्तञ्च, दधत्याः, सभाश्रियः समवसरणलक्ष्म्याः, लीलादर्पणतां केलिमुकुरताम्, प्रापुर्लेभिरे ॥ ४२ ॥

यत्र चेति—यत्र च यस्यां च सभायाम्, विकचपुण्डरीकषण्डेन प्रस्फुटकमलसमूहेन मण्डिता शोभिता स्फटिकमिव सितोपल इव स्वच्छं निर्मलं सलिलं जलं यस्यास्तथाभूता, खातिका परिखा, सतारका सनक्षत्रा, व्योमलक्ष्मीरिव गगनश्रीरिव, महामहिमविराजितं लोकोत्तरप्रभावशोभितम्, विभुं जिनेन्द्रम्, विलोकितुम्, द्रष्टुम्, आगता समायाता, स्वर्लोककल्लोलिनीव सुरपुरस्रवन्तीव सुराङ्गनानां नेत्रविलासैर्नयनचेष्टितैर्विजितास्ताभिरिव, ह्रिया त्रपया, अन्तर्हिताभिरन्तर्गताभिः, शफरीभिर्मीनैः, विराजिता शोभिता, खातिका परिखा, विभाति स्म शोभते स्म ।

प्रसूनानामिति—यत्र समवसरणसभायाम्, सुरभिलतमा सुगन्धियुक्ता प्रसूनानां कुसुमानाम्, वाटी वर्मा, वितता विस्तृता, ततस्तदनन्तरम्, लोलन्मणिगणैः शोभमानरत्नसमूहैः परीतो व्याप्तः, सालो वप्रः, समलसत् शुशुभे, ततस्तदनन्तरम्, चतुर्णां द्वाराणां प्रान्तान्तरेषु मध्यावकाशेषु विलसिते शोभिते, नाट्यसदने नृत्यनिकेतने, व्यलसताम् व्यशोभेताम् । शिखरिणीच्छन्दः ॥ ४३ ॥

या खल्विति—या खलु धर्मसभा, तत्र संमिलिताश्च ते भव्याश्चेति संमिलितभव्यास्तेषां संदोहस्तस्मात्, भगवद्दर्शनेन जिनेन्द्रावलोकनेन निर्गच्छन्त्यो निर्गलन्त्यो याः पापपरम्परा दुरितश्रेणयस्ताभिरिव, धूपघटेभ्यो धूपकुम्भेभ्यो निर्यन्त्यो या धूमरेखा धूम्रलेखास्ताभिः, परीतो व्याप्तोऽभ्रभागो गगनप्रदेशो यस्यां सा, ककुप्कामिनीजनानां काष्ठाङ्गनाजनानां कर्णपूरायमाणैः श्रवणालंकारायमाणैः पल्लवतल्लजैः किसलयश्रेष्ठैर्विराजितानां शोभितानाम्, इन्द्रोद्यानजयार्थं नन्दनोपवनविजयार्थम्, उदस्तहस्तानामिव समुन्नीतपाणीनामिव, अभ्रङ्कषशाखानां गगनचुम्बिकाण्डानाम्, चैत्यवृक्षाणां चैत्यतरूणाम्, चतुष्टयेन चतुष्केण, विभ्राजितैः शोभितैः विविधानि नैकप्रकाराणि विचित्राणि विस्मयावहानि धारायन्त्राणि जलयन्त्राणि, लतामण्डपानि निकुञ्जानि काञ्चनक्रीडाशैलाः सुवर्णकेलिपर्वतास्तैः पेशलैर्मनोहरैः चतुर्भिश्चतुःसंख्याकैः उपवनैरुद्यानैः, उपेता सहिता, नानाविधमणिगणैरनेकरत्नसमूहैः खचितौ निःस्यूतौ तोरणौ यस्यां तथाभूतया, सुवर्णवेदिकया काञ्चनवितर्दिकया, अलंकृता शोभिता, शिखावलो मयूरः, दन्तावलो हस्ती, दन्तिवैरी सिंहः, ते प्रमुखाः प्रधाना येषु तथाभूतानि यानि लाञ्छनानि चिह्नानि तैर्लाञ्छिताभिश्चिह्निताभिः, गगनतलोद्वेल्लनेन विहायस्तलप्रसरणेन, समाकृष्टाः ये सुरतरङ्गिणीतरङ्गा गङ्गाकल्लोलास्तेषां संभावनाया उत्प्रेक्षायाः सम्पादकानि कारकाणि

सरसिजविगलद्दिव्यध्वनिश्रवणकुतुकेन कुण्डलीभूयोपतस्थुषा मेरुणेव कनकमयसालेन विलसिता, सकलचित्तहारिणा पुष्पितकल्पकवनेन परिशोभिता, निखिलजगदानन्दकन्दलसंदायिन्या चतुर्गोपुरचारुतमवज्रवेदिकया संघटिता, जिनपतिदर्शनकुतूहलेन प्रादुर्भूतान्नवपदार्थानिव नवनव स्तूपानर्चासनाथान्धारयन्ती, भगवद्दिदृक्षया समागतेन मूर्तेन वायुमार्गेणेव स्फाटिकप्राकारेण परिवृता, सन्ततपरिस्फुरन्निशाकान्तकान्तविनिर्मितैर्भव्यसंदोहाध्यासितैर्द्वादशकोष्ठैः प्रतिष्ठिता विरराज ।

तत्र प्रविश्य स च गन्धकुटीसमाख्ये स्थाने मणिस्फुरितसिंहधृतासनाग्रे ।
पूर्वाचले रविमिव प्रविराजमानं वीरं ददर्श कुतुकेन जिनाधिराजम् ॥४४॥
प्रदक्षिणीकृत्य धराधिराजो भक्त्या जगत्पूज्यमथैष वीरम् ।
इयाज पूजाविधिना विधिज्ञस्तुष्टाव चैवं परितुष्टचित्तः ॥४५॥
स्वामिन्नम्बुदमार्गचुम्बिविटपैः रुद्धाम्बराशान्तरो
गायन्भृङ्गरवैस्तवामलगुणान्नृत्यंश्चलैः पल्लवैः ।
रक्तस्तावकदर्शनेन विविधैः पुष्पप्रवालोत्करै-
र्मूर्तो वा मधुरेव वीर भवतो राजत्यशोकद्रुमः ॥४६॥

---

व्यामुक्तानि धृतानि यानि मुक्ताफलानि तेषां रुचिनिचयेन कान्तिकलापेन रुचिरा मनोहरास्ताभिः, वैजयन्तीभिः पताकाभिः विलसिता शोभिता भगवन्मुखसरसिजात् जिनेन्द्रवदनारविन्दात् विगलन्निःसरन् यो दिव्यध्वनिर्निरक्षरवाणी तस्य श्रवणं समाकर्णनं तस्मिन् कौतुकं कौतूहलं तेन, कुण्डलीभूय मण्डलाकारीभूय, उपतस्थुषा समुपस्थितवता, मेरुणेव रत्नसानुनेव, कनकमयसालेन काञ्चननिर्मितवप्रेण, विलसिता शोभिता, सकलचित्तहारिणा निखिलमनोवशीकरणनदीष्णेन, पुष्पितं कुसुमितं यत्कल्पकवनं कल्पानोकहकाननं तेन, परिशोभिता समलंकृता, निखिलजगतां कृत्स्नलोकानामानन्दकन्दलस्य प्रमोदसमूहस्य संदायिन्या प्रदायिकया, चतुर्गोपुरैश्चतुःप्रधानद्वारैश्चारुतमा मनोहरतमा या वज्रवेदिका पविमयवितर्दिका तया, संघटिता कलिता, जिनपतिदर्शनकुतूहलेन जिनेन्द्रावलोकनकौतुकेन, प्रादुर्भूतान् प्रकटितान्, नवपदार्थानिव जीवाजीवास्रवबन्धसंवरनिर्जरापुण्यपापाभिधानपदार्थानिव, अर्चासनाथान् मूर्तिसहितान्, नव नव प्रतिदिशं नव नव संख्याकान्, स्तूपान् मणिमयस्तम्भैकान्, धारयन्ती दधती, भगवतो जिनेन्द्रस्य दिदृक्षा दर्शनेच्छा तया, समागतेन संप्राप्तेन, मूर्तेन मूर्तियुक्तेन, वायुमार्गेणेव पवनमार्गेणेव गगनेति यावत्, स्फाटिकप्राकारेण विशदोपलवप्रेण, परिवृता परीता, सन्ततं निरन्तरं परिस्फुरन्तो विकसन्तो ये निशाकान्तकान्ता चन्द्रकान्तमणयस्तैर्निर्मितै रचितैः, भव्यसंदोहेन भव्यजीवौघेनाध्यासिता अधिष्ठितास्तैः, द्वादशकोष्ठैर्द्वादशसभाभिः, प्रतिष्ठिता सहिता सती विरराज विशुशुभे ।

तत्र प्रविश्येति—तत्र धर्मसभायाम्, प्रविश्य प्रवेशं कृत्वा, स च जीवन्धरश्च, गन्धकुटीसमाख्ये गन्धकुटीनामके, स्थाने धामनि मणिस्फुरितं रत्नविभ्राजितं यत् सिंहधृतासनं हरिविष्टरं तस्याग्रे पृष्ठे पूर्वाचले उदयाचले रविमिव सूर्यमिव, प्रविराजमानं शोभमानम्, जिनाधिराजं जिनेन्द्रदेवम्, कुतुकेन कुतूहलेन ददर्श विलोकयामास ॥ ४४ ॥

प्रदक्षिणीकृत्येति—अथानन्तरम्, धराधिराजो नृपः एष जीवन्धरः, जगत्पूज्यं भुवनाभिवन्दनीयम्, वीरं वर्धमानम्, प्रदक्षिणीकृत्य परिक्रम्य, पूजाविधिना सपर्याविधिना, इयाज पूजयामास, विधिं जानातीति विधिज्ञः, परितुष्टचित्तः संतुष्टहृदयश्च सन्, एवं वक्ष्यमाणप्रकारेण, तुष्टाव स्तौति स्म ॥४५॥

स्वामिन्नम्बुदेति—हे स्वामिन् हे नाथ, हे वीर हे वर्धमानजिनेन्द्र, अम्बुदमार्गो गगनं तस्य चुम्बिनः स्पर्शिनो ये विटपाः शाखास्तैः, रुद्धाम्बराशान्तरो रुद्धान्तरीक्षकाष्ठामध्यः, भृङ्गरवैः षट्पदशब्दैः, तव भवतः अमलगुणान् निर्मलगुणान्, गायन् उच्चारयन्, चलैश्चञ्चलैः, पल्लवैः किसलयैः, नृत्यन् नृत्यं कुर्वन्, तावकदर्शनेन भवदवीक्षणेन, विविधैरनेकप्रकारैः, पुष्पप्रवालोत्करैः कुसुमकिसलयसमूहैः, रक्तो लोहितवर्णो कृतानुरागश्च, भवतस्तव, अशोकद्रुमः कङ्केलिवृक्षः, मूर्तः सदेहः, मधुरेव वा वसन्त एव वा, राजति शोभते ॥४६॥

वृष्टिः पौष्पी वरजिनपते तावकी सातिशुभ्रा
संद्रष्टुं त्वां गगनसरणेरागता चन्द्रिका किम् ।
यद्वा भीत्या कुसुमधनुषो हस्तपद्माच्च्युता द्राग्-
बाणश्रेणी नियतमखिलस्पष्टविज्ञानवार्धे ॥४७॥

क्वेयं लक्ष्मीरपारा क्व खलु जिनपते निश्चलं निःस्पृहत्वं
क्वासौ सुस्पष्टबोधः सकलविषयकः क्वेदृशानुद्धतत्वम् ।
रे रे सर्वे कुतीर्था वदत निजधियेत्येवमामन्द्रनादो
भोः स्वामिन्दुन्दुभिस्ते वदति जलधरध्वानपूरानुकारी ॥४८॥

सकलजगदीश्वर विश्ववेदनचतुर सुरधराधरधीर श्रीवीर, भवदीयातीतानागतवर्तमान-विज्ञानमसमानं भुवनत्रयैश्वर्यमहिमानं प्रकटीकुर्वाणम्, अमर्त्यैः स्वप्राभवप्रकाशनाय चक्रीकृत्य गगने त्रिधा विन्यस्तमिव क्षीरवाराशिसलिलम्, अत्यच्छस्वभावमपि भव्यौघानुरागमादधानं छत्रत्रयं विराजते ।

भामण्डले जिनपते तव दर्शनार्थं संप्राप्ततिग्मरुचिमण्डलशङ्क्यमाने ।
स्वातीतजन्मसरणिं मणिदर्पणाभे संपश्यति प्रविशदं खलु भव्यसङ्घः ॥४९॥

स्वामिन् जिनेन्दौ त्वयि जृम्भमाणे व्यर्थीकृतानामुडुराजभासाम् ।
द्राग्वेधसा दण्डनियन्त्रितानां राजीव ते राजति चामरालिः ॥५०॥

वृष्टिः पौष्पीति—अखिलं कृत्स्नं स्पष्टं विशदं यद् विज्ञानं तस्य वार्धिः सागरस्तत्सम्बुद्धौ हे अखिलस्पष्ट-विज्ञानवार्धे ! हे वरजिनपते हे जिनेन्द्र ! अतिशुभ्रा सिततरा, सा प्रसिद्धा, तावकी भवदीया, पौष्पी कौसुमी, वृष्टिर्वर्षणम्, त्वां भवन्तम्, संद्रष्टुमवलोकयितुम्, गगनसरणेराकाशमार्गात्, आगता प्राप्ता, किं चन्द्रिका ज्योत्स्ना, यद्वाथवा, भीत्या भयेन, कुसुमधनुषः कामस्य, हस्तपद्मात्करकमलात्, नियतं निश्चितं यथा स्यात् तथा, द्राक् झटिति, च्युता पतिता, बाणश्रेणी शरसन्ततिः । उत्प्रेक्षा । मन्दाक्रान्तावृत्तम् ॥४७॥

क्वेयं लक्ष्मीरिति—हे जिनपते जिनेन्द्र; इयमेषा, अपारा विपुला, लक्ष्मीः श्रीः, क्व कुत्र, निश्चलं स्थिरम्, निःस्पृहत्वं वितृष्णत्वम्, क्व, सकलविषयको निखिलपदार्थज्ञाता, असौ सुस्पष्टबोधो विशदज्ञानम्, क्व, ईदृशानुद्धातत्वमीदृगप्रगल्भत्वम्, क्व, रे रे सर्वे कुतीर्था मिथ्यामतपक्षपातिनः, निजधिया स्वबुद्ध्या वदत कथयत, इत्येवम्, आमन्द्रनादो गम्भीरशब्दः जलधरध्वानपूरानुकारी मेघगर्जितप्रवाहविडम्बकः ते तव, दुन्दुभिरानकः, भो स्वामिन् हे नाथ ! वदति कथयति ॥ ४८ ॥

सकलजगदीश्वरेति—सकलं च तज्जगच्चेति सकलजगद् तस्येश्वरस्तत्सम्बुद्धौ हे सकलजगदीश्वर निखिललोकनाथ, विश्वेषां सर्वेषां वेदने ज्ञाने चतुरो दक्षस्तत्सम्बुद्धौ हे विश्ववेदनचतुर, सुरधराधर इव सुमेरुरिव धीरस्तत्सम्बुद्धौ हे सुरधराधरधीर, श्रीवीर श्रीवर्धमान, भवदीयातीतानागतवर्तमानविज्ञानं भवत्कालत्रितयज्ञानम्, असमानमनुपमम्, भुवनत्रितयैश्वर्यमहिमानं लोकत्रयविभवमाहात्म्यम्, प्रकटीकुर्वाणं प्रकटयत्, अमर्त्यैः सुरैः स्वस्य प्राभवं विभुत्वं तस्य प्रकाशनाय प्रकटनाय, चक्रीकृत्य मण्डलीकृत्य, गगने, नभसि, त्रिधा त्रिप्रकारेण, विन्यस्तं विनिक्षिप्तम्, क्षीरवाराशिसलिलमिव क्षीरसागरजलमिव, अत्यच्छस्वभाव-मपि धवलनिसर्गमपि, भव्यौघानुरागं भव्यप्रचयलौहित्यं पक्षे भव्यप्रचयप्रेमाणम्, आदधानं कुर्वाणम्, छत्रत्र-यम् आतपवारणत्रितयम्, विराजते शोभते ।

भामण्डल इति—हे जिनपते हे जिनराज, तव भवतः, दर्शनार्थं विलोकनार्थम्, संप्राप्तः समागतो यो तिग्मरुचिः सूर्यस्तस्य मण्डलमिव बिम्बमिव शङ्क्यमानं संदिह्यमानं तस्मिन्, मणिदर्पणाभे रत्नादर्शतुल्ये, भामण्डले एतन्नामप्रातिहार्ये, प्रविशदमतिस्वच्छं यथा स्यात्तथा, स्वातीतजन्मसरणिं निजपूर्वभवपरम्पराम्, खलु निश्चयेन, संपश्यति समवलोकते ॥ ४९ ॥

स्वामिन्निति—हे स्वामिन् हे नाथ, जिनेन्दौ जिनचन्द्रमसि, त्वयि भवति, जृम्भमाणे वर्धमाने सति,

कुरङ्गैरुद्गतग्रीवैः श्रूयमाणा निरन्तरम् । जितपीयूषधारा ते दिव्यभाषा विराजते ॥ ५१ ॥

सन्ततविनमदमरनिकरमकुटतटघटितमुक्तारुचिपुनरुक्तनखचन्द्रिकानन्दितनिखिलजननयन-नीलोत्पल श्रीवीर, तव पञ्चाननासनम्, उपवनमिव नानापत्रलतान्वितं व्याजृम्भमाणवदनैः पञ्चवदनैरञ्चितं च, वाराकरनीरमिव सरत्नमकरम्, हेमाचलशृङ्गमिवात्युन्नतम्, सकलजगदानन्दं कन्दलयति ।

एवंभूतैरष्टभिः प्रातिहार्यैर्जुष्टः श्रीमन्मां भवाब्धौ निमग्नम् ।
वीर स्वामिन्नुद्धरेति क्षितीशो भक्त्याधिक्याद्देवदेवं ननाम ॥ ५२ ॥

अनुज्ञां लब्ध्वासावथ जिनपतेर्मातुलमुखैः समेता भूपालो गणधरमिहानम्य कुशलः ।
गृहीत्वा निस्सङ्गं जिनपगदितं संयमवरं तपस्तेपे जीवन्धरमुनिवरस्तस्य सविधे ॥ ५३ ॥

कुरूपशोभितोऽप्येष सुरूप इति विश्रुतः । मदनोऽपि बभूवाद्य शिवसौख्यकृतादरः ॥ ५४ ॥

आस्तां तावदिदमन्यदद्भुततममालक्ष्यते ।

---

व्यर्थीकृतानां निष्फलीकृतानाम्, अतएव, वेधसा विधात्रा, प्राग् झटिति, दण्डेन यष्ट्या नियन्त्रिता निरुद्धास्तासाम्, उडुराजभासां चन्द्रमरीचीनाम्, राजीव श्रेणिरिव, ते भवतः, चामरालिर्बालव्यजनपङ्क्तिः, राजति शोभते ॥५०॥

कुरङ्गैरिति—उद्गतग्रीवैरुन्नमितकण्ठैः, कुरङ्गैर्हरिणैः, निरन्तरं शश्वत्, श्रूयमाणा समाकर्ण्यमाना, जितपीयूषधारा पराभूतसुधाधारा ते भवतः, दिव्यभाषा दिव्यध्वनिः, विराजते विशोभते ॥५१॥

सन्ततेति—सन्ततं सर्वदा विनमन्तो नमस्कुर्वन्तो येऽमरनिकरा देवसमूहास्तेषां मकुटतटेषु घटिताः खचिताः या मुक्ता मुक्ताफलानि तासां रुच्या दीप्त्या पुनरुक्ता या नखचन्द्रिका नखर-ज्योत्स्ना तया नन्दितानि प्रसादितानि निखिलजनानां समग्रलोकानां नयनान्येव नीलोत्पलानि यस्य तत्सम्बुद्धौ, श्रीवीर श्रीवर्द्धमान, तव भवतः, पञ्चाननासनं सिंहासनम्, उपवनमिवोद्यानमिव, नाना-पत्रलताभिर्विविधदलवल्लरीभिः शिल्पत्वेन विन्यस्ताभिरन्वितं सहितम्, पक्षे वास्तविकदलवल्लरीभि-रन्वितम्, व्याजृम्भमाणवदनैः विकसन्मुखैः, पञ्चवदनैः सिंहैः, कृत्रिमैः पक्षे यथार्थमृगेन्द्रैः, अञ्चितं च शोभितं च, वाराकरनीरमिव समुद्रसलिलमिव, सरत्ना मकरा यस्मिंस्तत्, रत्नमयमकरसहितम्, हेमाचलशृङ्गमिव सुमेरुशिखरमिव, अत्युन्नतमतितुङ्गम्, सकलजगदानन्दं निखिलजनप्रमोदम्, कन्दलयति वर्द्धयति ।

एवंभूतैरिति—हे श्रीमन् हे लक्ष्मीमन्, हे वीर हे वर्द्धमान हे स्वामिन् हे नाथ, एवम्भूतै-रित्थंभूतैः, अष्टभिरष्टसंख्याकैः प्रातिहार्यैः जुष्टः सेवितः भवान्, भवाब्धौ संसारसागरे, निमग्नं ब्रुडितम्, माम्, उद्धर, निष्कासय, इति, भक्त्याधिक्यादनुरागातिशयात्, क्षितीशो जीवन्धरः, देवदेवं श्री-महावीरजिनेन्द्रम्, ननाम नमश्चकार । शालिनीच्छन्दः ॥ ५२ ॥

अनुज्ञामिति—अथानन्तरम्, कुशलो निपुणः, असौ भूपालो नृपः, जिनपतेर्जिनेन्द्रस्य, अनुज्ञा-मादेशम्, लब्ध्वा प्राप्य, मातुलमुखैर्मातृभ्रातृप्रधानैः, समेतः सहितः, इह सभायाम्, गणधरं गणेशम्, आनम्य नमस्कृत्य, जीवन्धरमुनिवरः सन्, निस्सङ्गं निष्परिग्रहम्, जिनपगदितं जिनेन्द्रोक्तम्, संयम-वरं श्रेष्ठसंयमम्, गृहीत्वा समादाय, तस्य गणधरस्य, सविधे निकटे, तपोऽनशनप्रभृतिकम्, तेपे तपति स्म । शिखरिणीच्छन्दः ॥ ५३ ॥

कुरूपशोभित इति—कुत्सितं रूपं कुरूपं तेन शोभितोऽपि राजितोऽपि सुरूपः सुन्दररूपसहित इति विरोधः पक्षे कुरुषु कुरुवंशेषु शोभितः समलंकृत इति । एष जीवकः, मदनोऽपि कामोऽपि पक्षे कामदेवपदवीधरोऽपि, अद्येदानीम्, शिवसौख्ये मोक्षसौख्ये कृतो विहित आदरः सम्मानं येन तथाभूतो बभूव आसीत् । विरोधाभासालंकारः ॥ ५४ ॥

आस्तामिति—अथवा, इदम् एतत्, आस्तां तावत्, भवतु नाम, किन्तु इदम्, अन्यत् इतरत्, अद्भुततममाश्चर्यातिशयकरम्, आलक्ष्यते दृश्यते ।

संगीतिव्यपदिष्टो यः सुहृद्भिरभिनन्दितः । सोऽयं सुहृज्जनेष्वासीदसंगीति प्रथां गतः ॥ ५५ ॥
देव्यो गन्धर्वदत्ताद्याः सहिताः स्वस्वमातृभिः । समीपे चन्दनार्यायाः संयमं जगृहुः परम् ॥ ५६ ॥

जीवन्धरोऽयं तपसि प्रवीणो यथाक्रमं नष्टघनाष्टकर्मा ।
रत्नत्रयं पूर्णमवाप धीरो महामुनिर्मान्यगुणाभिरामः ॥ ५७ ॥

अष्टाभिः स्वगुणैरयं कुरुपतिः पुष्टोऽथ जीवन्धरः
सिद्धः श्रीहरिचन्द्रवाङ्मयमधुस्यन्दिप्रसूनोच्चयैः ।
भक्त्याराधितपादपद्मयुगलो लोकातिशायिप्रभां
निस्तुल्यां निरपायसौख्यलहरीं संप्राप मुक्तिश्रियम् ॥ ५८ ॥

प्रजानां क्षेमाय प्रभवतु महीशः प्रतिदिनं सुवृष्टिः संभूयाद्भजतु शमनं व्याधिनिचयः ।
विधत्तां वाग्देव्या सह परिचयं श्रीरनुदिनं मतं जैनं जीयाद्विलसतु च भक्तिर्जिनपतौ ॥ ५९ ॥
कुरुकुलपतेः कीर्ती राकेन्दुसुन्दरचन्द्रिका विमलविशदा लोकेष्वानन्दिनी परिवर्धताम् ।
मम च मधुरा वाणी विद्वन्मुखेषु विनृत्यताद्विलसितरसा सालंकारा विराजितमन्मथा ॥ ६० ॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये मुक्तिलम्भो नामैकादशो लम्भः ।*

---

संगीतिव्यपदिष्ट इति—सुहृद्भिः सम्यग्दृष्टिभिः सुलोचनैर्वा, अभिनन्दितः प्रशंसितः, यो जीवकः, संगी परिग्रहवान्, इति व्यपदिष्टः कथितः, सोऽयम्, सुहृज्जनेषु सम्यग्दृष्टिपुरुषेषु सुलोचनेषु वा, असंगी परिग्रहरहितः, इति प्रथां प्रसिद्धिम्, गतः प्राप्तः, आसीद् बभूव, समीचीना गीतिः संगीतिस्तया व्यपदिष्टः व्यपदेशं प्राप्तः । विरोधाभासोऽलंकारः ॥ ५५ ॥

देव्यो गन्धर्वदत्ताद्या इति—स्वस्वमातृभिर्निजनिजजननीभिः, सहिता युक्ताः, गन्धर्वदत्ताद्या गन्धर्वदत्ताप्रभृतयः, देव्यो राज्ञ्यः, चन्दनार्यायाः एतन्नामगणिन्याः, समीपे पार्श्वे, परमुत्कृष्टम्, संयमं चारित्रम्, जगृहुर्गृहीतवत्यः ॥ ५६ ॥

जीवन्धरोऽयमिति—तपसि तपश्चरणे, प्रवीणो निपुणः, यथाक्रमं क्रमेण, नष्टानि घनानि अष्ट कर्माणि यस्य व्यपगतनिबिडाष्टकर्मा, धीरो गभीरः, मान्यगुणाभिरामो महनीयगुणसुन्दरः, महामुनिर्महायतिः, अयमेषः जीवन्धरः स्वामी, पूर्णं समग्रम्, रत्नत्रयं सम्यग्दर्शनज्ञानचारित्रात्मकम्, अवाप लेभे ॥ ५७ ॥

अष्टाभिरिति—अथाष्टघनकर्मक्षयानन्तरम्, अष्टाभिः अष्टसंख्यैः, स्वगुणैः सम्यक्त्वादिभिः, पुष्टः पोषं प्राप्तः, श्रीहरिचन्द्रस्य ग्रन्थकर्तुर्वाङ्मयमेव मधु मकरन्दं तस्य स्यन्दिनो ये प्रसूनोच्चयाः कुसुमसमूहास्तैः, सिद्धः प्रथितः, भक्त्यानुरागातिशयेनाराधितं सेवितं पादपद्मयुगलं चरणारविन्दयुगं यस्य तथाभूतः, अयमेषः, कुरुपतिः जीवन्धरः, लोकातिशायिनी प्रभा यस्यास्ताम्, निस्तुल्यां निरुपमाम्, निरपाया निर्विनाशा सौख्यलहरी सुखपरम्परा यस्यां ताम्, मुक्तिश्रियं निर्वृतिलक्ष्मीम्, संप्राप संलेभे ॥ ५८ ॥

प्रजानामिति—महीशो नृपः, प्रतिदिनं प्रतिवासरम्, प्रजानां लोकानाम्, क्षेमाय कल्याणाय, प्रभवतु समर्थो भवतु, सुवृष्टिः सुवर्षा, संभूयात् भवतु, व्याधिनिचयो रोगसमूहः, शमनं शान्तिम्, भजतु प्राप्नोतु, श्रीर्लक्ष्मीः, वाग्देव्या सरस्वत्या, सह सार्धम्, अनुदिनं प्रत्यहम्, परिचयं संपर्कम्, विधत्तां करोतु, जैनं जिनस्येदं जैनं जिनप्रणीतम्, मतम्, जीयात् जयतु, जिनपतौ जिनेन्द्रे, भक्तिश्च अनुरागातिशयः विलसतु शोभताम् ॥ ५९ ॥

कुरुकुलपतेरिति—विमलविशदा निर्मलोज्ज्वला, आनन्दिनी हर्षिणी, कुरुकुलपतेर्जीवन्धरस्य, कीर्तिर्यशः राकेन्दुसुन्दरचन्द्रिका पूर्णचन्द्रचारुज्योत्स्ना, लोकेषु भुवनेषु, परिवर्धतां वृद्धिं प्राप्नुयात्, विलसितरसा सुशोभितशृङ्गारादिरसा, सालंकारा रूपकोपमाद्यलंकारसहिता, विराजितमन्मथा विशोभितमदना, मम कवेः, वाणी च भारती च, विद्वन्मुखेषु विपश्चिद्वक्त्रेषु, विनृत्यतां नृत्यं करोतु । हरिणीछन्दः ॥ ६० ॥

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी'व्याख्याधरे जीवन्धरचम्पूकाव्ये मुक्तिलम्भो नामैकादशो लम्भः ।

# प्रथम लम्भ

जिनके दोनों चरण, शोभायमान नखोंकी कान्तिरूपी आकाशगङ्गाके बीच कछुएके समान जान पड़ते हैं, सेवासे नम्रीभूत इन्द्रोंके हीरकमय मुकुटोंकी पङ्क्ति हंसके समान आचरण करती है, दर्शन करनेवाली देवाङ्गनाओंके नेत्रोंके समूह मछलियोंके समूहके समान जान पड़ते हैं और राजाओंकी अञ्जलियाँ कमल-कुड्मलोंके समान प्रतिभासित होती हैं, वे आदि जिनेन्द्र तुम सबकी रक्षा करें ॥१॥ जिन्होंने अपने शोभासम्पन्न चरणोंके द्वारा समस्त जगत्‌को आक्रान्त किया है, (पक्षमें जिसकी शोभायमान किरणें समस्त जगत्‌में व्याप्त हैं), जो श्रेष्ठ महिमाको करनेवाले हैं (पक्षमें जो अतिशय शीतलताको करनेवाला है), जिन्हें अनन्त सुख और अनन्त ज्ञान प्राप्त हुआ है, (पक्षमें जिससे जीवोंको अपरिमित सुखका बोध होता है), जिनकी कान्ति अथवा श्रद्धा संताप और अज्ञानान्धकारको नष्ट करनेमें प्रसिद्ध है (पक्षमें जिसकी निजकी कान्ति गर्मी और अन्धकार दोनोंको नष्ट करनेमें प्रसिद्ध है), जो सज्जनोंके समूहके अधिपति हैं (पक्षमें जो नक्षत्रोंके समूहका राजा है), जो अनन्त चतुष्टयरूप लक्ष्मीसे सहित है (पक्षमें अनुपम शोभासे सम्पन्न है) और जो दिव्यध्वनिसे सुशोभित होनेवाली समस्त कलाओंके स्वामी हैं (पक्षमें जो आकाशमार्गमें सुशोभित होनेवाली समस्त कलाओंसे प्रिय हैं) ऐसे धीर वीर चन्द्रप्रभ जिनेन्द्ररूपी चन्द्रमा हमारी बुद्धिरूपी नीलकमलिनीका विकास करें ॥२॥ जो हरीश पूज्य होकर भी अहरीश पूज्य हैं (पक्षमें जो हरि-विष्णु और ईश-रुद्रके द्वारा पूज्य होकर भी दिनके स्वामी सूर्य, उपलक्षणसे ज्योतिषी देवोंके द्वारा पूज्य हैं), सुरेश वन्द्य होकर भी असुरेशवन्द्य हैं (पक्षमें इन्द्रोंके द्वारा वन्दनीय होकर भी भवनवासी देवोंके इन्द्रों द्वारा वन्दनीय हैं), और जो अनङ्गरम्य—शरीरसे सुन्दर न होकर भी शुभाङ्गरम्य—शुभ शरीरसे सुन्दर हैं (पक्षमें-कामदेवके समान सुन्दर होकर भी शुभ शरीर-परमौदारिकशरीरसे सुन्दर हैं) ऐसे श्रीशान्तिनाथ भगवान् तुम सबका भला करें ॥३॥ जो सात हाथ उत्तुङ्ग परमौदारिक शरीरके धारक हैं, मोक्षसुखके करनेवाले हैं, सम्यग्दृष्टि मनुष्य सदा जिनकी स्तुति करते हैं और जो विषयासक्ति रूपी रागसे रहित हैं ऐसे श्रीवर्धमान स्वामीरूपी अपूर्व कामदेवकी मैं स्तुति करता हूँ। भावार्थ—इस श्लोकमें भगवान् वर्धमान स्वामीको अपूर्व कामदेव बतलाया है अर्थात् कामदेवका जैसा रूप काव्य जगत्‌में प्रसिद्ध है उससे विभिन्नरूप बतलाया है। प्रचलित कामदेव शरीर रहित है परन्तु वर्धमान स्वामी आयत-लम्बे परमौदारिक शरीरके धारक हैं, प्रचलित कामदेव शिव अर्थात् महादेवजीको सुख करनेवाला नहीं है अपितु उनके शत्रुरूपसे प्रसिद्ध है परन्तु वर्धमान स्वामी शिव अर्थात् मोक्षसुखके करनेवाले हैं, प्रचलित कामदेवको सम्यग्दृष्टि जीव अच्छा नहीं समझते पर वर्धमान स्वामीको अच्छा समझते हैं—सदा उनकी स्तुति किया करते हैं और प्रचलित कामदेव अपनी रति नामक स्त्रीके रागसे हीन नहीं हैं, सहित है परन्तु वर्धमाम स्वामी रति अर्थात् विषयासक्ति रूप रागसे रहित हैं। इस प्रकार प्रचलित कामदेवसे विभिन्नता रखनेवाले वर्धमान स्वामीरूपी अपूर्व कामदेवकी स्तुति की गई है ॥४॥ जो लोकके ऊर्ध्वभागरूपी एकान्त स्थानमें मुक्तिरूपी स्त्रीके साथ विराजमान हैं, जिन्होंने अष्ट कर्म नष्ट कर दिये हैं और जो अत्यन्त विशुद्धताको प्राप्त हैं उन सिद्ध भगवान्‌का मैं हृदयमें चिन्तवन करता हूं ॥५॥ मैं सम्यग्दर्शन सम्यग्ज्ञान और सम्यक्चारित्ररूपी उस श्रेष्ठ रत्नत्रयकी आराधना करता हूँ जो कि भव्यजीवों का मुख्य आभूषण है, मुक्तिरूपी कान्ताको सन्तुष्ट करनेवाला है, और अज्ञानान्धकारके समूहको नष्ट करनेवाला है ॥६॥ जो कर्मोंको नष्ट करनेके लिए छुरी है, संसाररूपी समुद्रसे पार करनेके लिए जहाज है, जिसने अपने केशपाशसे मेघोंकी माला जीत ली है, और जो जिनेन्द्र भगवान्‌के

मुखरूपी कमलमें देदीप्यमान रहती है वह जिनवाणी—सरस्वती देवी जयवन्त रहे ॥७॥ जो निरतिचार सम्यक्चारित्र रूपी मणियोंसे सहित है (पक्षमें छिद्र रहित गोलाकार उत्तम मणियोंसे युक्त है) और दया दाक्षिण्य आदि अनन्त गुणोंसे गुम्फित है (पक्षमें अनेक धागोंसे गुंथी हुई है) उस पूर्वाचार्योंकी परम्पराको मैं एक अपूर्व माला मानता हूँ ॥८॥ गद्यावली और पद्यपरम्परा ये दोनों पृथक् पृथक् भी बहुत भारी आनन्द उत्पन्न करती हैं फिर जहाँ दोनों मिल जाती हैं वहाँकी तो बात ही निराली हो जाती है वहाँ वे दोनों शैशव और जवानीके बीच बिचरनेवाली कान्ताके समान बहुत अधिक हर्ष उत्पन्न करने लगती हैं ॥९॥ सुधर्माचार्य गणधरने जो कथा महाराज श्रेणिकके लिए कही थी उसी कथाको कहनेका हम प्रयत्न करते हैं ॥१०॥ महाकवि हरिचन्द्र कहते हैं कि मेरी वाणी चिरकाल बाद कृतकृत्य हो सकी क्योंकि उसने भाव जिनेन्द्र श्रीजीवन्धर स्वामीको स्वयं ही वरण किया है—उन्हें अपना प्रतिपाद्य विषय बनाया है ॥११॥ यद्यपि मेरी वाणी अत्यन्त मलिन है तथापि वह पापको नष्ट करनेवाले जीवन्धर स्वामीके चरित्रको पाकर निश्चित ही धीर वीर मनुष्योंको उस तरह सन्तुष्ट करेगी जिस तरहकी काले काजलकी कान्ति किसी बिम्बोष्ठी स्त्रीके नयनकमलकी संगति पाकर सन्तुष्ट करने लगती है ॥१२॥

अथानन्तर इस मध्य लोकमें वह जम्बूद्वीप है जो कि लवणसमुद्रकी चञ्चल तरङ्गों रूपी हस्त-कमलोंके द्वारा फेंके हुए मोतियों और मूँगाओंकी पंक्तिमें सुशोभित तटोंसे अलंकृत है, समस्त द्वीपोंके मध्यमें स्थित रहने पर भी जो अपनी शोभाकी बहुलतासे ऐसा जान पड़ता है मानो उन सब द्वीपोंके ऊपर ही विद्यमान है, आकाशतलको चुम्बित करनेवाले जम्बू वृक्षके बहाने जो ऐसा जान पड़ता है मानो मस्तक ऊपर उठा कर अपनी महिमाके द्वारा तिरस्कृत हुए स्वर्गलोकको प्रत्येक क्षण देख ही रहा है, अपार संसार रूपी अन्धकारसे अन्धे हुए जीवलोकको चारों पुरुषार्थोंका प्रकाश देनेके लिए ही मानो जो दो सूर्य और दो चन्द्रमाओंके व्याजसे चार दीपक धारण कर रहा है, जो पृथिवी रूपी महिलाके मूर्तिधारी सौन्दर्यके समान जान पड़ता है। लक्ष्मीरूपी नर्तकीके नृत्यकी रङ्गभूमि-सा प्रतिभासित होता है, स्वर्गलोकके प्रतिबिम्बके समान शोभा देता है और जो समस्त देवोंके नेत्र रूपी मछलियोंके आधार-कूप सा विदित होता है। ऐसे जम्बूद्वीपमें एक हेमाङ्गद नामका अनुपम देश है। वह देश भरत क्षेत्रके आभूषण समान जान पड़ता है। उस देशमें कमलवनोंकी मकरन्दमें लुभाये हुए भ्रमरोंके समूह इधर-उधर मँडराते रहते हैं उनसे ऐसा जान पड़ता है मानो वह देश समस्त मनुष्योंके नेत्रोंको बाँधनेके लिए लोहेकी सांकल ही धारण कर रहा हो। वह देश पक जाने के कारण पीली पीली दिखने वाली धानकी बालोंके समूहसे पीला पीला हो रहा है और उससे ऐसा जान पड़ता है मानो पक्षियोंके समूह आकर खेती नष्ट न कर दें इस भयसे किसानोंने एक पीला कपड़ा ही खेतों पर ढाँक रक्खा है। वह देश जहाँ तहाँ लगाई हुई धान्यकी उन गगन-चुम्बी राशियोंमें सुशोभित है जो कि अपनी ऊँचाईके कारण ऐसी जान पड़ती है कि इस भूमिने जबसे हमारा बीज बोया गया तभीसे हम लोगोंको भारी संताप पहुँचाया है इस बैरके कारण ही मानो उसका मार्ग रोकनेके लिए ऊपर बढ़ी जा रही है अथवा ऐसी जान पड़ती है मानो उस देशका सौन्दर्य देखनेके लिए कुलाचल ही आ पहुँचे हों। अथवा ऐसी प्रतिभासित होती है कि उदयाचल और अस्ताचलके बीचमें निरन्तर गमन करनेसे थके हुए सूर्यके विश्राम के लिए विधाताने विश्राम गिरि ही बना दिये हैं। वह देश बाग-बगीचोंके उन अनेक वृक्षोंके समूहसे सुशोभित है जो कि बहुत दूर तक बढ़े हुए शाखा-समूहमें सुशोभित नई कोपलोंके के बहाने हाथ उठाकर अनेक प्रकारके पक्षियोंकी बोलीके द्वारा ऐसे जान पड़ते हैं मानो जीतने के लिए कल्पवृक्षोंको ही बुला रहे हों। वे वृक्षोंके समूह मेघमण्डल तक आ पहुँचे थे और

उससे ऐसे जान पड़ते थे मानो जन्मसे ही लेकर जल सींचना आदि उपकारोंके द्वारा अपना भरण-पोषण करने वाले मेघोंके लिए फल फूल आदिकी भेंट समर्पण करनेके लिए ही वहाँ तक आ पहुँचे हों। वह देश उन अनेक नदियोंमें भी घिरा हुआ है जो ठीक युवती स्त्रियोंके समान जान पड़ती हैं क्योंकि जिस प्रकार युवती स्त्रियाँ नेत्रोंसे सहित होती हैं उसी प्रकार वे नदियाँ भी विकसित नील कमल रूपी नेत्रोंसे सहित हैं, जिसप्रकार युवती स्त्रियाँ मुखोंसे समुद्भासित होती हैं उसीप्रकार वे नदियाँ भी कमलोंसे समुद्भासित हैं। जिसप्रकार युवती स्त्रियाँ काले काले केशोंसे सहित होती हैं उसी प्रकार वे नदियाँ भी काले-काले भ्रमरोंसे सहित हैं, जिसप्रकार युवती स्त्रियाँ प्रसन्न कामदेवकी मकरीसे सुशोभित सुन्दर चक्रवाक पक्षीके आकार वाले गोल-पयोधरों—स्तनोंको धारण करती हैं उसीप्रकार वे नदियाँ भी ऐसे पय अर्थात् जलको धारण करती हैं जो कि अठखेलियाँ करनेवाली मछलियोंसे चिह्नित हैं, मगरमच्छोंसे सुशोभित और अतिशय शोभायमान चक्रवाक पक्षियोंसे सहित हैं।

उस हेमाङ्गद देशमें राजपुरी नामकी जगत् प्रसिद्ध नगरी है। उस नगरीके कोटमें लगे हुए नील मणियोंकी किरणें सूर्यका मार्ग रोक लेती हैं जिससे सूर्य यह समझकर विवश हो जाता है कि मुझे राहुने घेर लिया है और इस भ्रान्तिके कारण ही वह हजार चरणों (पक्षमें किरणों) से सहित होने पर भी वहाँके कोटको नहीं लाँघ सकता है ॥१३॥ वह नगरी अपने मेघस्पर्शी महलोंकी ध्वजाओंके वस्त्रोंसे सूर्यके घोड़ोंकी थकान दूर करती रहती है तथा बिजलीके समान चमकीली शरीरलताकी धारक स्त्रियोंसे सुशोभित रहती है। उसके मणिमय महलोंकी फैली हुई कान्तिकी परम्परासे स्वर्गलोकमें चँदोवा-सा तन जाता है और नील पत्थरके कोटसे निकलती हुई कान्ति वहाँ हरे-भरे वन्दनमालाके समान जान पड़ती है ॥१४॥ उस नगरीके हरे-भरे मणियोंसे बने हुए मकानोंकी कान्तिसे व्याप्त होकर जब मेघोंके समूह हरे-भरे दिखने लगते हैं तब सूर्यके रथके घोड़े उन मेघोंको दूबा और पानी समझकर उनकी ओर झपटते हैं और चूँकि सूर्य घोड़ोंकी इस प्रवृत्तिको सहनेमें असमर्थ हैं इसलिए ही क्या उसने उत्तरायण और दक्षिणायणके भेदसे अपने दो मार्ग बना लिये हैं ॥१५॥ उस नगरीकी सुन्दरी स्त्रियोंके मुखरूपी चन्द्रमासे पिघले हुए चन्द्रकान्तमणि निर्मित महलोंसे जो पानी झरता है उसे पीनेकी इच्छासे चन्द्रमाका मृग बड़े वेगसे आया परन्तु ज्योंही उसने महलोंकी शिखरपर बने हुए सिंह देखे त्योंही भयभीत हो बड़े वेगसे बाहर निकल गया ॥१६॥ उस नगरीके अतिशय श्रेष्ठ राजमहलोंकी देहलियोंमें जो गारुत्मत मणि लगे हुए हैं उनसे मृगोंके समूह पहले कई बार छकाये जा चुके हैं इसलिए अब वे कोमल तृणोंको देखकर छूते भी नहीं हैं परन्तु जब वे ही तृण स्त्रियोंकी मन्द मुसकानसे सफेद हो जाते हैं तब चर लेते हैं ॥१७॥ उस नगरीके ऊँचे-ऊँचे महलोंकी छतोंपर बैठनेवाली स्त्रियोंके नेत्ररूपी नील कमलोंकी काली कान्ति ऐसी जान पड़ती है मानो अपनी सखी गङ्गानदीको देखनेके लिए यमुना ही बड़ी शीघ्रतासे स्वर्गकी ओर बढ़ी जा रही हो ॥१८॥ उस नगरीके मकानोंकी छतोंपर देवाङ्गनाओंके प्रतिबिम्ब पड़ रहे थे और वहीं पर तरुणजनोंकी निजकी स्त्रियाँ बैठी हुई थीं। यद्यपि दोनोंका रूप-रङ्ग एक-सा था तो भी तरुणजन नेत्रोंकी टिमकारकी कुशलतासे उन दोनोंको अलग-अलग जान लेते हैं। इसी प्रकार वहाँके नील-मणियोंसे बने महलोंके अग्रभागमें स्थित किन्हीं सुन्दरियोंके मुखचन्द्रको तथा पास हीमें विचरनेवाले चन्द्रमाके बिम्बको देखकर राहु आकाशाङ्गणमें संशयको प्राप्त हुआ था ॥१९॥ उस नगरीके बड़े-बड़े महलोंको देखकर ही मानो देवेन्द्र, शीघ्र ही टिमकार रहित हो गया है, कमलोंसे सुशोभित परिखाको देखकर ही मानो गङ्गानदी विषाद—खेद (पक्षमें शिव) को प्राप्त हुई है, वहाँके जिन-मन्दिरोंको देखता हुआ सुमेरु पर्वत अपने कमनीय शब्द धारण कर रहा है (पक्ष में) सुवर्णमय सुन्दर शरीर धारण करता है और देवोंकी नगरी अमरावती भी उस नगरीको देखकर तथा

शोकसे आकुल हो बलके साथ द्वेष करनेवाले (पक्षमें बल नामक दैत्यको नष्ट करनेवाले) इन्द्रको स्वीकृत कर चुकी है ॥२०॥ जिसकी महिमा अति प्रशंसनीय थी, जिसकी प्रवृत्ति अत्यन्त आदरणीय थी, जिसके पैर रखनेका पीठ राजाओंके मुकुटोंमें लगे हुए मणियोंसे सदा अनुरञ्जित रहा करता था तथा जिसकी उज्ज्वल कीर्ति शत्रुओंके साथ-साथ दिशाओंके अन्त तक जा पहुँची थी ऐसा सत्यन्धर राजा उस राजपुरी नगरीका शासन करता था ॥२१॥

वह राजा इन्द्रके समान था क्योंकि जिसप्रकार इन्द्र समस्त सुमनोगण अर्थात् देवोंके समूहको आनन्दित करता है उसीप्रकार वह राजा भी समस्त सुमनोगण अर्थात् विद्वानोंके समूहको आनन्दित करता था। अथवा यमराजके समान था क्योंकि जिसप्रकार यमराज महिषी-समधिष्ठित अर्थात् भैंससे सहित होता है उसीप्रकार वह राजा भी महिषी-समधिष्ठित अर्थात् पट्टरानीसे सहित था। अथवा वरुणके समान था, क्योंकि जिसप्रकार वरुण आशान्त-रक्षण अर्थात् पश्चिम दिशाके अन्त तककी रक्षा करने वाला है उसी प्रकार वह राजा भी आशान्त-रक्षण अर्थात् दिशाओं के अन्ततक की रक्षा करने वाला था। अथवा पवनके समान था, क्योंकि जिसप्रकार पवन पद्मामोदरुचिर अर्थात् कमलोंकी सुगन्धिसे मनोहर होता है उसीप्रकार वह राजा भी पद्मामोदरुचिर अर्थात् लक्ष्मीके हर्षसे मनोहर था। अथवा महादेवके समान था, क्योंकि जिसप्रकार महादेव महासेनानुयात अर्थात् कार्तिकेय नामक पुत्रसे अनुगत रहते हैं उसी-प्रकार वह राजा भी महासेनानुयात अर्थात् बड़ी भारी सेनासे अनुगत था। अथवा नारायणके समान था क्योंकि जिसप्रकार नारायण वराहवपुष्कलोदयोद्धृतधरणीवलय अर्थात् सूकरके शरीरसे पृथिवी मण्डलका उद्धार करने वाले थे उसीप्रकार वह राजा भी वराहवपुष्कलोदयोद्धृतधरणी-वलय अर्थात् उत्कृष्ट युद्धके पुष्कल—परिपूर्ण अभ्युदयसे पृथिवी मण्डलका उद्धार करने वाला था। अथवा ब्रह्माके समान था, क्योंकि जिस प्रकार ब्रह्मा, सकलसारस्वतामरसभानुभूति अर्थात् समस्त सारस्वत देवोंकी सभाकी अनुभूतिसे सम्पन्न थे उसी प्रकार वह राजा भी समस्त श्रेष्ठ विद्वानोंकी सभाकी अनुभूतिसे सम्पन्न था। वह राजा भद्र गुण होकर भी अनाग था अर्थात् भद्र जातिका होकर भी हाथी नहीं था (परिहार पक्षमें कल्याणकारी गुणोंका धारक होकर भी अपराधोंसे रहित था) विबुधपति—देवोंका स्वामी-इन्द्र होकर भी कुलीन था—पृथिवीपर स्थित रहता था (परिहार पक्षमें विद्वानोंका पति होकर भी श्रेष्ठ कुलमें उत्पन्न हुआ था)। सुवर्णधर-सुमेरु होकर भी अनादित्याग था—सूर्यके आगमनसे रहित था (परिहार पक्षमें—सुवर्ण अथवा सुयशका धारक होकर अनादि त्यागसे सहित था अथवा अनुपम त्यागसे सहित था। यद्यपि उसके वचन सरस अर्थके पोषक थे तथापि वह रसार्थ पोषक वचन नहीं था (परिहार-पक्षमें—नर समूहको पुष्ट करनेवाले वचनोंसे सहित था आगमाल्याश्रित—अर्थात् आगमकी आली-समूहसे सहित होकर भी नागमाल्याश्रित था अर्थात् आगमकी आलीसे सहित नहीं था (परिहार पक्ष में हाथियोंकी मालाओं-समूहोंके सहित था)।

उस राजाकी कीर्ति दिशा रूपी अङ्गनाओंके स्तन-तटपर लगे हुए चन्दनके समान जान पड़ती थी जो उसकी लाल-लाल तेजोलक्ष्मी दिशारूपी अङ्गनाओंके स्तनतटपर केशरके द्वारा बनाये हुए अलङ्कारकी शङ्का करती थी। उस राजाकी कीर्ति बड़े-बड़े राजाओंके मुकुटों पर आभूषणस्वरूप मालाके समान सुशोभित होती थी और उसकी एकबारकी सेवा याचक-जनों के लिए कल्पवृक्षोंके समूहके समान आचरण करती थी अर्थात् कल्पवृक्षोंके समान उनके मनोरथ पूर्ण कर देती थी ॥ २२ ॥

जब राजा सत्यन्धर पृथिवीमण्डलका शासन करता था तब मदसे उत्पन्न मलिनता आदिका सम्बन्ध मदोन्मत्त हाथियोंमें ही था अर्थात् वे ही मदजलसे मलिन थे, अन्य मनुष्यों में मद अर्थात् अहंकारसे उत्पन्न होने वाली मलिनता नहीं थी। पराग अर्थात् रज फूलोंके

समूहमें ही थी अन्यत्र पराग अर्थात् बहुत भारी अपराध नहीं था। नीचसेवना अर्थात् ढालू जमीनकी सेवा नदियोंमें ही थी। अन्य मनुष्योंमें नीचजनोंकी सेवा नहीं थी। आर्तवत्व अर्थात् तद् तद् ऋतुओंके परिणमनसे सहित होना फलोंसे लदी हुई वनकी पंक्तियोंमें ही था वहाँके मनुष्योंमें आर्तवत्व अर्थात् दुःखसे सहितपना नहीं था। करपीडन अर्थात् हाथके द्वारा मर्दित होना स्त्रियोंके स्तन-कलशोंमें ही था, अन्य मनुष्योंमें करपीडन अर्थात् भारी टेक्सके कारण कष्ट नहीं था। विविधार्थचिन्ता अर्थात् अनेक पदार्थोंका विचार व्याख्यानकी कलाओंमें ही था, अन्य मनुष्योंमें विविध पदार्थोंकी चिन्ता-फिक्र नहीं थी सबके लिये सब पदार्थ सुलभ थे। नास्तिवाद अर्थात् 'नहीं है' ऐसा कथन स्त्रियोंकी कमरमें ही होता था, अन्य मनुष्योंमें नास्तिवाद नहीं था—सब आस्तिक थे। गुणभङ्ग अर्थात् धनुषकी डोरीका भङ्ग युद्धोंमें ही होता था, अन्य मनुष्योंमें गुणभङ्ग अर्थात् दया, दाक्षिण्य आदि गुणोंका भङ्ग—विनाश नहीं होता था। खलसङ्ग अर्थात् खलिहानोंका संसर्ग धानोंके समूहमें ही था—धानके समूह ही चावल निकालनेके लिए खलिहानोंमें इकट्ठे किये जाते थे, वहाँ अन्य मनुष्योंमें खलसंग अर्थात् दुर्जनोंकी संगति नहीं थी। अपाङ्गता अर्थात् कटाक्षोंका चलना मृगनयनी स्त्रियोंके नेत्रोंकी चञ्चल चाल में ही था, अन्य मनुष्योंमें अपाङ्गता अर्थात् विकलाङ्गता नहीं थी—सब सम्पूर्ण अङ्गोंके धारक थे। मलिनमुखता अर्थात् अग्रभागका काला होना स्त्रियोंके स्तन रूप कुड्मलोंमें ही था, अन्य मनुष्यों में मलिनमुखता अर्थात् कृष्णमुखता—नीचता नहीं थी। आगमकुटिलता अर्थात् टेढ़ी चाल साँपों में ही थी, अन्य मनुष्योंमें आगमकुटिलता अर्थात् शास्त्रके विषयमें कुटिल मनोवृत्ति नहीं थी। अजिनानुराग अर्थात् मृगचर्मका स्नेह महादेवमें ही था, अन्य मनुष्योंमें जिनेन्द्रसे इतर देवोंमें स्नेह नहीं था। सोपसर्गता अर्थात् प्र परा आदि उपसर्गोंसे सहित होना भू आदि धातुओंमें ही था, अन्य मनुष्योंमें सोपसर्गता अर्थात् आपत्तियोंसे सहित होना नहीं था। दरिद्रभाव अर्थात् कृशपना स्त्रियोंके उदरमें ही था अन्य मनुष्योंमें दरिद्रभाव अर्थात् निर्धनता नहीं थी। द्विजिह्वता अर्थात् दो जिह्वाओं का होना सापोंमें ही था, अन्य मनुष्योंमें द्विजिह्वता अर्थात् चुगलखोरी नहीं थी। पलाशिता अर्थात् पत्तोंका सद्भाव वनके वृक्षोंमें ही था, अन्य मनुष्योंमें पलाशिता अर्थात् मांसका भोजन नहीं था। अधरराग अर्थात् ओठोंकी ललाई स्त्रियोंके मुख-कमलोंमें ही थी, अन्य मनुष्योंमें अधरराग अर्थात् नीच जनोंके साथ स्नेह नहीं था। तीक्ष्णता अर्थात् शीघ्रतासे किसी बातको समझ सकना विद्वानोंकी बुद्धियोंमें ही था। अन्य मनुष्योंमें तीक्ष्णता अर्थात् क्रूरता नहीं थी। कठिनता अर्थात् कड़ापन स्त्रियोंके स्तनोंमें ही था, अन्य मनुष्योंमें कठिनता अर्थात् निर्दयता नहीं थी। नीचता अर्थात् गहराई नाभिके गर्तोंमें ही थी, अन्य मनुष्योंमें नीचता अर्थात् क्षुद्रता नहीं थी। विरोध अर्थात् पक्षियोंका रोका जाना पिंजरोंमें ही था, अन्य मनुष्योंमें विरोध अर्थात् वैर नहीं था। अपवादिता अर्थात् पकार वकार आदि ओष्ठस्थानीय अक्षरोंका अभाव निरोष्ठ्य काव्योंमें ही था, अन्य मनुष्योंमें अपवादिता अर्थात् निन्दा करनेकी आदत नहीं थी। घनयोगभङ्ग अर्थात् मेघोंके संसर्गका अभाव वर्षाऋतुकी समाप्तिमें ही था, अन्य मनुष्योंमें घनयोगभङ्ग अर्थात् गाढ़ संसर्गका अभाव नहीं था—सभीके सभीके साथ गाढ़ सम्बन्ध थे। कलिकोपचार अर्थात् फूलोंकी कलियोंका उपचार कामजन्य संतापमें ही होता था, अन्य मनुष्योंमें कलह और क्रोधका संचार नहीं होता था। कलहंसकुल अर्थात् कलहंस पक्षियोंका समुदाय क्रीड़ा-सरोवरोंमें ही था अन्य मनुष्योंमें कलहका सद्भाव नहीं था।

राजा सत्यन्धरका मुख चन्द्रमाके समान कान्तिवाला था (पक्षमें चन्द्रप्रभ भगवान् था), उसकी दोनों भुजाएँ अजित थीं—किसीके द्वारा जीती नहीं जा सकी थीं (पक्षमें अजितनाथ तीर्थंकर थीं), उसका शरीर सुपार्श्व था—अच्छी पसलियोंसे युक्त था (पक्षमें सुपार्श्वनाथ तीर्थंकर था), उसका कार्य स्वाधीन धर्म्म था—धर्मानुकूल था (पक्षमें धर्मनाथ भगवान्‌से सहित था)-

उसके हृदयमें श्रेष्ठ, शान्त तथा उत्तम व्रतोंसे सम्पन्न चारित्र विद्यमान था (पक्षमें भगवान् आदिनाथ, शीतलनाथ और मुनिसुव्रतनाथ विद्यमान थे), उसका राज्य लक्ष्मीसे वर्धमान था—निरन्तर बढ़ता रहता था (पक्षमें अन्तिम तीर्थंकर था), उसका कुल अत्यन्त विमल-निर्दोष था (पक्षमें विमलनाथ तीर्थंकर था) और उसकी कीर्तिका समूह अनन्त-अन्तरहित था (पक्षमें अनन्तनाथ तीर्थंकर था)। इस प्रकार समस्त विद्याओंके विनोदसे भरा हुआ वह राजा तीर्थंकरोंका प्रत्यक्ष करानेवालेके समान सदा जयवन्त रहता था ॥२३॥ जिसमें अनेक शत्रु डूब रहे हैं—कट कट कर मर रहे हैं ऐसे उस राजाके कर-किसलयमें धारण की हुई तलवारके जलसे जो छींटोंके समूह उछटे थे उन्हें लोग ताराओंका समूह कहते हैं यह मिथ्या है अर्थात् वे जलके ही छींटे हैं ताराओं के समूह नहीं हैं। यदि ऐसा नहीं होता तो उनमें मकर, मीन और कर्क नामक जलजन्तु (पक्षमें इन नामोंवाली राशियाँ) कौन होते ? ॥२४॥

जब कभी उस राजाकी भौंह क्रोधसे टेढ़ी होती है तो शत्रु राजा अपनेको शरणहीन समझकर वनकी ओर भागते हैं। वहाँ वृक्षोंकी पङ्क्ति, वायुके आघातसे हिलनेवाले शाखारूप हाथोंसे तथा पक्षियोंकी बोलीरूप शब्दोंके द्वारा यह कहकर मना करती है कि यहाँ राजाके विरोधी लोगोंको प्रवेश नहीं करना चाहिए। जब विरोधी राजा वृक्षावलीको उल्लंघनकर आगे बढ़ने लगते हैं तब वह वृक्षावली राजाके अपराधके भयसे ही मानो आँधीसे काँपने लगती है और बड़े-बड़े काँटोंके द्वारा उन विरोधी राजाओंके बाल पकड़कर खींचती है ऐसी जान पड़ती है। जिनके शरीर वनवीथी रूपी मेघमालामें बिजलीके समान सुशोभित हो रहे थे ऐसी उस राजाके शत्रुओंकी स्त्रियाँ जब वनमें इधर-उधर भटकती रहती थीं तब उनके मुखोंको कमल समझकर हंसावली उसपर टूट पड़ती थी। जब वे उस हंसावलीको अपने हाथकी लाल-लाल अङ्गुलियोंसे दूर हटानेका प्रयत्न करती थीं तब उनके हाथोंको पल्लव समझकर तोताओंके बच्चे खींचने लगते थे। जब वे दुःखी होकर हा हा शब्द करती हुई चिल्लाने लगती थीं तब उन्हें कोयल समझकर कौए उनके मस्तकपर चोंचकी टक्कर लगाने लगते थे। इस क्रियासे उनके शिरकी वेणी खुलकर फैल जाती थी तो उसे सर्प समझकर मयूर खींचने लगते थे। जब हताश हो लम्बी सांस भरने लगती थीं तो उसकी सुगन्धिमें लुभाये हुए मूर्ख भौंरे मदान्ध हो उनकी ओर झपट पड़ते थे और सामने नाकरूपी चम्पाको देखकर भी पीछे नहीं हटते थे। अत्यन्त स्थूल नितम्ब और भारी स्तनोंके भारसे उनके शरीर नीचेकी ओर झुक रहे थे, वे चाहती थीं कि विधाताने हम लोगोंके स्तनोंमें जो कठोरता दी है, काश, वह चरण-कमलोंमें कर देते तो अच्छा होता। इस प्रकार जब वे भागनेका प्रयत्न करती थीं तब उनके चरणयुगलके नखोंकी कान्तिको चाँदनी समझकर चकोर पक्षी आड़े आ जाते थे और मिलकर उनके मार्गको रोक लेते थे। तदनन्तर जब वे पृथिवी पर गिरकर लोटने लगती थीं तब उनके सुवर्णके समान पीले-पीले स्तनोंके युगलको पके हुए तालफल समझकर वानर खींचने लगते थे। इस प्रकार यह कहा जा सकता है कि राजाके विरोधी लोगोंको वन भी शरण नहीं देता था। इसके सिवाय एक बात और थी वह यह कि—

चारों दिशाओंमें जो समुद्र थे वे सत्यन्धर राजाके प्रतापरूपी सूर्यके द्वारा क्षणभरमें सुखा दिये गये थे। तदनन्तर शत्रु राजाओंकी स्त्रियोंके आँसुओंके प्रवाहसे इतने भर गये थे कि तटको उल्लंघन कर बहने लगे ॥२५॥

राजा सत्यन्धरके शत्रुओंकी स्त्रियाँ जब कभी वनके बीचमें बैठी होती थीं तब वे ऐसी जान पड़ती थीं मानो वनको मोहित करनेके लिए उत्पन्न हुई मालतीकी लताएँ ही हैं। उसी समय अपने पिछले संस्कारोंके कारण उनके बच्चे हठ पकड़ जाते थे कि हमारा खेलनेका राजहंस लाओ। बच्चोंकी हठ और विवशताके कारण उनकी आँखोंसे आँसुओंका प्रवाह निकल पड़ता था

और स्तनोंके ऊपर इकट्ठा होकर सरोवरके समान जान पड़ने लगता था। उस आँसुओंके सरोवरमें उनके मुख तथा नेत्रोंके प्रतिबिम्ब पड़ते थे जो कि ठीक कमल और मछलियोंके समान जान पड़ते थे। उसी आँसुओंके सरोवरमें चन्द्रमाका भी प्रतिबिम्ब पड़ रहा था उसे दिखाकर वे अपने बच्चोंसे कहती थीं कि यह है तेरा हंस। और विरहाग्निमें जिसका शरीर झुलस रहा है ऐसी मेरे लिए भी यह हंस है-सूर्य है। इस प्रकार जिस किसी तरह वे अपने बच्चोंको शान्त कर पाती थीं। जब कभी उनके बच्चे यह कह कर रोने लगते थे कि हमारे खेलनेका मयूर दिखलाओ उस समय वे बहुत दुखी होती थीं और किसी मयूरीके आगे नृत्य करते हुए मयूरको दिखाकर गद्गद वाणीसे कहने लगती थीं कि यह है तेरा मयूर। अरे तेरा ही नहीं मेरा भी यह शिखी—मयूर (पक्षमें अग्नि) है।

उस राजा सत्यन्धरकी विजया नामसे प्रसिद्ध रानी थी जो कि कान्तिकी अधिष्ठात्री देवी थी और सौन्दर्यरूपी सागरकी मानो वेला ही थी ॥२६॥ जिस प्रकार बिजली मेघको, नूतन मञ्जरी आमके वृक्षको, पुष्पोंकी सम्पत्ति चैत्र मासको, चाँदनी चन्द्रमाको और निर्मल प्रभा सूर्यको विभूषित करती है उसी प्रकार वह दीर्घलोचना राजा सत्यन्धरको सुशोभित करती थी ॥२७॥ रानी विजयाके चरणयुगल, कण्ठ और मुख क्रमसे कमल, शङ्ख और चन्द्रमाकी समानता धारण करते थे। कान्ति, हस्तयुगल और नेत्र क्रमसे लक्ष्मी, विधि और कमलसे भी अधिक उल्लासताको धारण करते थे। चोटी मन्दगति और स्तन क्रमसे उत्तम सर्प, हाथी और निकटवर्ती पर्वतकी समानता धारण करते थे। इस प्रकार कहना पड़ता है कि उस सुलोचनाके शरीरकी सुन्दरता शब्दोंसे बहुत दूर थी अर्थात् शब्दोंके द्वारा उसकी शारीरिक सुन्दरताका वर्णन नहीं हो सकता था ॥२८॥ यद्यपि कामदेव शरीरहीन है तथापि उसे जागृत करनेके लिए सञ्जीवन औषधियोंके समान बहुत-सी स्त्रियाँ उसके अन्तःपुरमें थीं तो भी एक विजया ही राजाके लिए प्राणोंके समान प्रिय थी ॥२९॥ शृंगाररूपी सागरकी तरङ्गावलीके समान उस देवीको सुखसे रमण कराता हुआ राजा सत्यन्धर सदा आनन्दके सागरमें निमग्न रहता था और इन्द्रकी पदवीको तृणके समान तुच्छ समझता था ॥३०॥

यद्यपि राजा सत्यन्धर समस्त राजाओंके शिरोमणि थे, विद्वानोंकी सभाके अग्रगण्य थे, राजनीतिज्ञोंके स्वामी थे, भले-बुरे तत्त्वकी वास्तविकताके जाननेवालोंमें सर्वश्रेष्ठ थे और समस्त योग्य आचरणोंके उदाहरण थे तथापि किसी एक समय कामसे परतन्त्रित चित्त होनेके कारण वे कृत्य और अकृत्यका विवेक खो बैठे। फलस्वरूप कर्मरूपी सारथिसे प्रेरित होकर ही मानो उन्होंने सज्जनरूपी वनको जलानेके लिए अङ्गारके समान काष्ठाङ्गारके लिए अपनी पृथिवी देनी चाही। तदनन्तर जिन्हें इस बातका पता चला जो मानो शरीरधारी राजकीय तन्त्र और मन्त्र ही थे, प्रजाके भाग्यके पर्याय थे, कुलकी प्रतिष्ठाके प्रकार थे, क्षमा और अनुरागके पर्याय थे, और शास्त्ररूपी समुद्रके पारदर्शी थे ऐसे मुख्य मन्त्री लोग परस्परमें स्वयं सलाहकर तथा राजाके सम्मुख आकर उचित निवेदन करने लगे।

हे देव! आप प्रसिद्ध नीतिरूपी समुद्रको बढ़ानेके लिए चन्द्रमाके समान हैं अतः आपके समक्ष हम लोगोंका कुछ भी निवेदन करना ठीक उसी तरह संगत नहीं है जिस तरह कि संसार-प्रसिद्ध सुगन्धिताको धारण करनेवाली कस्तूरीका मालतीके फूलसे सुगन्धित करना संगत नहीं है ॥३१॥ तथापि अपनी जिह्वाकी खाज दूर करनेके लिए हम लोगोंने एक विज्ञप्ति-प्रार्थनाकी रचना की है सो वह विज्ञप्ति, इस समय सुननेके लिए आपकी प्रतीक्षा कर रही है ॥३२॥

हे देव! जिस प्रकार नन्दनवनमें सुशोभित होनेवाली हरिचन्दनकी लता दूसरे वनमें ले जानेके योग्य नहीं है, आम्रवनमें लगी हुई मालतीकी लता जिस प्रकार धूवरके वनमें ले जानेके योग्य नहीं है, कमलवनमें रहनेवाली लक्ष्मी जिस प्रकार आकके वनमें ले जानेके योग्य नहीं है,

कमलोंसे झरते हुए मकरन्दसे प्रमुदित भ्रमरोंकी पङ्क्ति जिस प्रकार गोकुलके वनमें ले जाने योग्य नहीं है और सज्जनोंके समूहके द्वारा सीखी हुई विद्या जिस प्रकार मिथ्या दृष्टि लोगोंके पास ले जानेके योग्य नहीं है उसी प्रकार आपकी भुजारूपी अर्गलासे लालित पृथिवीरूपी स्त्री अन्य भुजाओंपर आरोपण करनेके योग्य नहीं है। यह राजधर्म आपको अवश्य ही याद रखना चाहिए कि राजाओंको अपने हृदयका भी सर्वथा विश्वास नहीं करना चाहिए फिर दूसरे लोगोंकी तो बात ही क्या है ? हाँ, इतना अवश्य करना चाहिए कि जिससे सब लोग राजाको चन्द्रमा और और सूर्यके समान अपना तथा विश्वास करने योग्य समझते रहें।

हे राजन् ! यह बात नीतिशास्त्रमें प्रसिद्ध है कि धर्म और अर्थ ये दोनों ही पुरुषार्थ काम पुरुषार्थके मूल हैं। जब मूल ही नष्ट हो जावेगा तब कामकी कथा कहाँ रहेगी ? मयूरके नष्ट हो जानेपर भी क्या केका वाणी रहती है ? हे राजन् ! उर्वशी नामक अप्सरामें अनुराग करनेसे ब्रह्मा क्षणभरमें पतित हो गये थे, पार्वतीके स्नेहसे महादेवने अपना आधा शरीर स्त्रीरूप कर लिया था, स्त्रियोंमें चपल चित्त होनेसे विष्णु भी निन्दाके स्थान बने और बुद्धकी भी यही दशा रही। हे पृथिवीपते ! आप यह सब अच्छी तरह जानते हैं ॥३४॥ इस प्रकार मन्त्रियोंने नीतिसे भरी वाणी कही परन्तु जिस प्रकार सछिद्र घटमें दूध नहीं ठहर सकता है उसी प्रकार वह राजाके कामसे जर्जरित चित्तमें ठहर नहीं सकी ॥३५॥

तदनन्तर कामदेवके बाणोंका निशाना होनेसे जिसकी चेतना मोहसे आक्रान्त हो चुकी थी ऐसे राजा सत्यन्धरने जिसका दुराचार समस्त दिशाओंमें प्रसिद्ध था ऐसे काष्ठाङ्गारको बुलाकर तथा एकान्त स्थानमें ले जाकर इस प्रकार कहा—

चूँकि हम निरन्तर काम-साम्राज्यका पालन कर रहे हैं इसलिए आप सावधान होकर इस राज्यका पालन कीजिये ॥३६॥ इस प्रकार राजाके वचन सुनकर काष्ठाङ्गारने सन्तोषके साथ उत्तर दिया कि हे राजन् ! जिस प्रकार गजराजके द्वारा उठाया हुआ बहुत भारी भार बैल नहीं उठा सकता है उसी प्रकार आपके द्वारा उठाया हुआ भार धारण करनेके लिए मैं समर्थ नहीं हूँ ॥३७॥ जिस प्रकार गधा घोड़ाकी शोभा नहीं धारण कर सकता, मुर्गा गरुड़की चाल नहीं चल सकता और चिड़वा कलहंसके मार्ग पर नहीं चल सकता उसी प्रकार मैं भी आपके मार्ग पर नहीं चल सकता ॥३८॥

जिसका चित्त कौतुकसे भर रहा है ऐसे काष्ठाङ्गारको पूर्वोक्त प्रकारसे विनय सहित बोलता देखकर राजाने रोक दिया कि अब आपको इस विषयमें एक शब्द भी नहीं बोलना चाहिये। तदनन्तर 'मैं धन्य हूँ' इस प्रकार कहकर अपना आदेश शिरपर धारण करनेवाले काष्ठाङ्गारको राजाने राज्यका भार धारण करनेमें नियुक्त किया और प्रतिदिन बढ़ती हुई राग रूपी लताके लिए जिसका हृदय आलवालके समान जान पड़ता था ऐसे पञ्चेन्द्रियोंके विषय-सुखसे पराङ्मुख रहने वाले राजा सत्यन्धरने कुछ दिन बिताये।

अथानन्तर किसी समय जब रात्रि समाप्त होनेको आई तब चन्द्रमा पश्चिम दिशाकी ओर ढल गया। वह चन्द्रमा ऐसा जान पड़ता था मानो पश्चिम दिशा रूपी स्त्रीकी काजलसे सुशोभित चाँदीकी डिबिया ही हो, अथवा सूर्य कहीं देख न ले इस भयके कारण शीघ्रतासे भागती हुई रात्रि रूपी पुंश्चली स्त्रीका गिरा हुआ मानो कर्णाभरण ही हो। अथवा आकाश रूपी हाथीके गण्डस्थलसे निकले हुए मोतियोंके रखनेका मानो पात्र ही हो। अथवा पश्चिम समुद्रसे जल भरनेके लिए रात्रि रूपी स्त्रीके द्वारा अपने हाथमें लिया हुआ मानो स्फटिकका घड़ा ही हो। अथवा पश्चिम दिशा सम्बन्धी दिग्गजके शुण्डादण्डसे गिरा हुआ मानो कीचड़ सहित मृणाल ही हो। अथवा कामदेवके बाणोंको तीक्ष्ण करने वाला मानो शाणका पाषाण ही हो। अथवा पश्चिम दिशा रूपी स्त्रीकी मानो फूलोंसे बनी हुई गेंद ही हो, अथवा अस्ताचल रूपी हाथीके

गण्डस्थल पर रक्खा हुआ मानो कामदेवका वज्रमय खेट हो। वह चन्द्रमा पश्चिमकी ओर ढलकर अस्ताचलकी शिखरपर आरूढ़ हो गया था इसलिए ऐसा जान पड़ता था मानो वीर-जिनेन्द्रकी क्रोधाग्निसे जिसका शरीर जल गया है ऐसे कामदेवको कलङ्कके बहाने अपनी गोदमें रखकर उसे जीवित करनेके इच्छासे संजीवन औषध ही खोज रहा हो और आकाश रूपी वनमें खोजनेके बाद अब उसी उद्देश्यसे अस्ताचलकी शिखर पर आरूढ़ हुआ हो। उस-समय तारागण भी बिरल बिरल रह गये और संध्याके कारण लालिमाको प्राप्त हुए अन्धकार रूपी कुङ्कुमके द्रवसे चिह्नित आकाशरूपी पलंगपर रात्रि तथा चन्द्रमा रूपी नायक-नायिकाके रतिसंमर्दके कारण बिखरे फूलोंके समूहके समान म्लानताको प्राप्त हो गये थे। रात्रिके समय चमकने वाली ओषधियाँ अपने तेजसे रहित हो गई थीं सो ऐसी जान पड़ती थीं मानो अपने पति चन्द्रमाको श्रीहीन देखकर ही उन्होंने अपना तेज छोड़ दिया हो। चन्द्रमा लक्ष्मीसे रहित हो गया था जिससे ऐसा जान पड़ता था मानो इस कुमुदोंके बन्धुने—हिमायतीने हमारी वसति स्वरूप कमलोंके समूहको विध्वस्त किया है—क्षति पहुँचाई है इस क्रोधसे ही मानो लक्ष्मी चन्द्रमासे निकलकर अन्यत्र चली गई थी। कुमुदिनियोंमेंसे काले-काले भ्रमरोंके समूह निकल रहे थे जिससे ऐसा जान पड़ता था मानो कुमुदिनी रूपी स्त्रियां उन निकलते हुए भ्रमरोंके बहाने अपने पतिकी विरहानल सम्बन्धी धूमकी रेखाको ही प्रकट कर रही हों। इसके सिवाय उस समय प्रातःकालकी ठण्डी ठण्डी हवा चल रही थी जिससे ऐसा जान पड़ता था मानो स्त्री पुरुषोंके संभोगके समय जो पसीना आ रहा था उससे उनकी कामाग्नि बुझनेवाली थी सो वह प्रातः कालकी हवा खिले हुए कमलोंकी परागके कणोंके द्वारा उक्त कामाग्निको मानो पुनः प्रज्वलित ही कर रही हो।

ऐसे समयमें सोती हुई विजया रानीने अपने शुभ और अशुभको सूचित करनेवाला स्वप्न देखा सो ठीक ही है क्योंकि उसे जिस भवितव्यकी स्वप्नमें भी खबर नहीं थी वह स्वप्न के द्वारा सूचित हो गया ॥ ३६ ॥ कुछ ही समय बाद बन्धूकके फूलके समान कान्ति वाली सन्ध्या—प्रातःकालकी लाली सुशोभित होने लगी और वह ऐसी जान पड़ने लगी मानो आकाश रूपी समुद्रमें प्रकट हुए मूँगाओंके वनकी पंक्ति ही हो ॥ ४० ॥ तदनन्तर सूर्यका उदय हुआ। वह सूर्य ऐसा जान पड़ता था मानो पूर्व दिशा रूपी तरुणीके घरका रत्नमय दीपक ही हो, अथवा आकाश रूपी लक्ष्मीका उत्तम मणिमय गेंद ही हो, अथवा सन्ध्या रूपी स्त्रीके मुखपर लगा हुआ केशरका टीका ही हो ॥ ४१ ॥

उस समय वह सूर्य किसी ऐसे बड़े दीपकके समान जान पड़ता था, जो कि पूर्व समुद्र रूपी तेलके समीप विराजमान था और पंखियोंके गिरनेके भयसे जिसके ऊपर आकाश रूपी मरकत मणिका पात्र ढँक दिया गया था। उस समय सूर्यका मण्डल अपने चारो ओर फैलनेवाली जिन लाल-लाल प्रभाओंकी पंक्तिसे अनुरञ्जित हो रहा था वे ऐसी जान पड़ती थीं मानो पूर्व समुद्रमें जो मूँगाओंके समूह हैं उन्हींको कान्ति बाहर फैल रही थी, अथवा आकाश रूपी समुद्र-को सुखानेके लिए पूर्व समुद्रसे निकालकर ऊपरकी ओर गई हुई मानो बड़वानलकी ज्वालाएँ ही थीं। इस प्रकार अनुरक्त मण्डलको धारण करनेवाला सूर्य उदयाचलकी शिखरपर आरूढ़ हुआ ही था कि इतनेमें—

राजभवनके भीतर कोयलके साथ स्पर्धा करनेवाले मनोहर कण्ठोंके धारक बन्दीजन आकर विजयारानीको जगानेके लिए गम्भीर ध्वनिसे निम्न प्रकार मङ्गल पाठ पढ़ने लगे ॥ ४२ ॥ हे देवि ! हे राजाके मन रूपी मानसरोवरकी हंसी ! यहाँ यह प्रातःकाल कुछ-कुछ खिले हुए कमल रूपी हाथोंके द्वारा तुम्हें हाथ जोड़ रहा है और भृङ्गावलीके मधुर शब्दोंके द्वारा प्रबोध गीत गा रहा है ॥ ४३ ॥ हे देवि ! तुम्हारे मुख-कमलके द्वारा जिसकी श्री जीत ली गई है ऐसा यह

चन्द्रमा, तुम्हारे नेत्रोंसे पराजित हरिणको अपनी गोदमें रखे हुए अस्ताचल रूपी दुर्गकी शरणमें गया था परन्तु वहाँ यह अभागा वारुणी–पश्चिम दिशा ( पक्षमें मदिरा ) का सेवन कर बैठा इसलिए अब मन्द तेज होकर शीघ्र ही नीचे गिर जायगा ऐसा जान पड़ता है ॥ ४४ ॥ हे देवि ! इधर यह पूर्व दिशा रूपी स्त्री संन्ध्या रूपी लाल साड़ी पहिनकर नक्षत्र रूपी अक्षतोंसे सहित आकाश रूपी उत्तम पात्रमें सूर्य रूपी मणिमय दीपक और सूर्यके घोड़े रूप हरी हरी दूवाको सँजोकर तेरा बहुत भारी मङ्गलाचार कर रही है—तेरी आरती उतार रही है ॥ ४५ ॥ हे देवि ! यह भ्रमरोंकी पंक्ति तुम्हारे केशपाशका सौन्दर्य चुरानेमें बहुत चतुर थी। इसलिए रात्रिके समय राजाने ( पक्षमें चन्द्रमाने ) इसे शीघ्र ही कमलोंके बन्धनमें कैद कर दिया था। अब प्रातःकाल होनेपर इसे छोड़ा है इसलिए हर्षित होकर मनोहर शब्दोंके द्वारा तुम्हारी स्तुति कर रही है सो स्वीकृति करो ॥ ४६ ॥ इधर कमलकी परागसे जिसका समस्त शरीर धूसरित हो रहा है ऐसा वियोगके द्वारा खिन्न हुआ यह चकवा इस समय अपने पंख फैलाकर अपनी स्त्रीका आलिंगन कर रहा है और उसके मुँहमें अपनी चोंच देता हुआ बड़ा अच्छा मालूम होता है ॥ ४७ ॥ हे देवि ! जिस प्रकार हंसी बालूके पुञ्जको छोड़ती है और चन्द्रमाकी कला सफेद मेघकी पंक्तिको छोड़ देती है उसी प्रकार तू भी हंसतूलसे बनी शय्या को छोड़ ॥ ४८ ॥

यद्यपि वह रानी स्वप्न देखते ही जाग उठी थी पर शय्यासे नहीं उठी थी। उस समय वह बन्दी जनोंके पूर्वोक्त पद्यालापोंसे तथा माङ्गलिक बाजोंके शब्दोंसे उस प्रकार जाग उठी जिस प्रकार कि मेघमालाकी गर्जनासे मयूरी जाग उठती है। उसने उठकर प्रातःकाल सम्बन्धी कार्य किये और तदनन्तर प्रातःकालिक क्रियाओंसे निवृत्त होकर बैठे हुए महा-बुद्धिमान गुणवन्त अपने पति सत्यन्धर महाराजके पास जाकर स्वप्न सम्बन्धी समाचार सुनाया।

हे शत्रुओंको जीतनेवाले आर्यपुत्र ! जिस प्रकार आमोंके मौर कोयलको बोलनेके लिए प्रेरित करते हैं उसी प्रकार आज मेरे द्वारा देखे गये तीन स्वप्न मुझे बोलनेके लिए अत्यन्त प्रेरित कर रहे हैं ॥ ४६ ॥

हे इन्द्रके वैभवको जीतने वाले आर्यपुत्र ! आज मैंने रात्रिके पिछले पहरमें देखा है कि अशोकका एक वृक्ष खड़ा है उसे कुल्हाड़ी हाथमें लिये हुए एक पुरुष काटकर गिरा देता है। उसी समय उसमेंसे मुकुटसे सुशोभित अशोकका एक छोटा पौधा निकलता है और उसके पास आठ मालाएँ लटक रही हैं। यह स्वप्नका समाचार सुनकर तथा उसके शुभ और अशुभ फलका विचार कर राजाके हृदयमें अपने नष्ट होनेकी शङ्का रूपी कील पड़ गई। वह कभी हर्षमें निमग्न होता था तो कभी शोक रसमें डूबता था। उसकी दशा ऐसी हो रही थी मानो वह मनमें चन्दन और विष दोनोंके रसोंसे लिप्त हो रहा हो। अथवा उस हंसके समान उसकी दशा थी जिसके पंखमें एक ओर तो कमलिनीका कंटक लग रहा था और दूसरी ओर कमल-दलका सुखद स्पर्श उसे प्राप्त हो रहा था। वह राजा बहुत ही धैर्यवान् था। तथा उसकी बुद्धि चतुराईसे भरपूर थी। जिस प्रकार कोई हाथी अपने छोटे दाँत भीतर छिपा लेता है और दो बड़े दाँत बाहर निकाल देता है उसी प्रकार समुद्रके समान गम्भीर राजाने अशुभ फलवाले स्वप्नको अपने हृदयके भीतर छिपा लिया और शुभफल वाले दो स्वप्नोंका फल निम्न प्रकार कह दिया।

उसने कहा कि हे देवि ! तुमने जो मुकुट सहित अशोक वृक्ष देखा उसका फल यह है कि जिस प्रकार पूर्व दिशा सूर्यको प्राप्त करती है उसी प्रकार तुम कुलको प्रकाशित करनेके लिए रत्न-दीपके समान ऐसे पुत्रको प्राप्त करोगी जो कि राजाओंका शिरोमणि होगा। इसके सिवाय उस अशोकके पास जो आठ मालाएँ देखी हैं वे यह बतला रही हैं कि उसके आठ स्त्रियाँ होंगी ॥५०॥ कानों तक लम्बे नेत्र धारण करने वाली रानीने पतिके वचन सुनकर कहा कि हे प्राणवल्लभ ! मेरा हृदय प्रथम स्वप्नका फल जानना चाहता है इस समय वही कहिये ॥५१॥

